*श्री गणेशाय नमः *

# ॥ श्री देवी स्तोत्रम् ॥

गङ्गौली ग्राम वासिना

मीमांसक श्री मेधानाथ शर्मणा

प्रकाशितम् संशोधितञ्च ।

काशीस्थ 'काशी विश्वनाथ" मुद्रणालये

* धन्नूलाल खत्री इत्यनेन मुद्रितम् *

सं० १९९६

फाल्गुन शु० १२ गुरौ ।

पुस्तक मिलने का ठिकाना

रानी कोठा

श्री धर्मनाथ झा

काशी

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं ।
न चे देवन्देवो न खलु कुशलः स्पन्दितु मपि ॥
अतस्त्वामा राध्यां हरिहर विरिञ्च्यादिभिरपि ।
प्रणंतुंस्तोतुं वो कथमकृत पुण्यः प्रभवति ॥१॥
तनीयासंपांसुं तव चरण पंकेरुह भवम् ।
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम् ॥
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां ।
हरः संक्षुद्यैनं भजति भसितोद्धूलनं विधिं ॥२॥
हरिस्त्वामाराध्यः प्रणत जन सौभाग्य जननीं ।
पुरा नारी भूत्वा पुर रिपुमपि क्षोभ मनयत् ॥
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा ।
मुनीनामप्यन्तः प्रभवति हि मोहाय जगताम् ॥३॥
सुधा सिन्धोर्मध्ये सुरविटपि वाटी परिवृते ।
मणि द्वीपे नीपो पवनवति चिन्तामणि गृहे ॥
शिवाकारेमञ्चेपरमशिवपर्यङ्क निलयां ।
भजन्ति त्वां धन्याः कति च न चिदानन्दलहरीम् ॥४॥
महीं मूलाधारे कमपिमणिपूरे हुतवहां ।
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ॥
मनोपि भ्रूमध्ये सकलमपि भित्वा कुलपथं ।
सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥५॥
चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि ।

प्रभिन्नाभिः शम्भोर्नवभिरपि मूल प्रकृतिभिः ॥
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलयः ।
त्रिरेषाभिः सार्द्धं तव शरण कोणाः परिणताः ॥६॥
भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा -
मितिस्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ॥
तदैवत्वं तस्मै दिशसि निज सायुज्यपदवीं ।
मुकुन्द ब्रह्मेन्द्र स्फुट मुकुट नीराजित पदाम् ॥७॥
सुधामप्यास्वाद्य प्रतिभय जरामृत्युहरिणीम् ।
विपद्यन्ते विश्वे विधिशत मखाद्या दिविषदः
करालं यत्क्ष्वेडं : कवलितवतः कालकलना ।
न शम्भोस्तन्मूलं तव जननि ताटङ्क महिमा ॥८॥
चतुः षष्टया तन्त्रैः सकल मति संधाय भुवनम् ।
स्थितस्तत्तत्सिद्धिप्रसव परतन्त्रैः पशुपतिः ॥
पुनस्त्वंनिर्बन्धादखिल पुरुषार्थैक घटना ।
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥९॥
मनस्त्वं व्योमस्त्वं मरुदसि मरुत्सारथिरसि ।
त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहिपरम् ॥
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा ।
चिदानन्दाकारं शिवयुवति भावेन बिभृषे ॥१०॥
शिवे शृंगाराद्रा तदितरजने कुत्सनपरा ।
सरोषा गंगायाम् गिरिश चरिते विस्मयवती ॥

हराहिभ्यो भीता सरसिरुहसौभाग्य जननी ।
सखाधुस्मेराते मयि जननि दृष्टिः सकरुणा ॥११॥
कलत्रं वैधात्रं कति कति भजन्ते न कवयः ।
श्रियोदेव्याः को वा न भवति पतिः कैरपि धनैः ॥
महादेवं हित्वा तव सति सती नाम चरमे ।
कुचाभ्यामासंगः कुरवकतरोरप्यसुलभः ॥१२॥
मातर्भवानि तव पाद रजो भवानि ।
मातर्भवानि तव दासतरो भवानि ॥
मातर्भवानि न भवानि यथा भवेस्मिन् ।
त्वद् भाग् भवान्यनु दिनं न पुनर्भवानि ॥१०॥
श्रुतीनां मूर्धानो दधति तव यौ शेखरतया ।
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ॥
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी ।
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणि रुचिः ॥१॥
सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते ।
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ॥
चिरं जीवन्नेव क्षपित पशुपाशव्यतिकरः ।
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥ २ ॥
पंचास्य पंचदश नेत्र पिधानदक्षाः ।
दाक्षायणि वरकराः कुशलंदिशन्तु ॥
द्वौ वल्लकीं कथय केति च वादयन्ता -

वष्टादशोऽपि कुरुते शिशु मौन निद्राम् ॥३॥

न तपसा न दमेन समाधिना,
न च तथा विहितैर्क्रतुभिर्यथा ।
तव पदाब्ज पराग निषे वणात्-
भवति मुक्ति रजे भव सागरात् ॥

इत्येषा वाङ्मयी पूजा देव्या आचार्य्य भाषिता ।
सस्कृत्य मेधा नाथेन उपकृत्यै प्रकाशिता ॥
काश्यामथ यथायोगक्षेमं निवसता सता ।
समत्यां वत्सरे श्रीमद्विश्वनाथपदेऽर्पिता ॥

॥ श्रीगणेशायनमः ॥

कदम्ब वन चारिणीं मुनि कदम्ब कादम्बिनीं ।
नितम्ब जित भूधरांसुर नितम्बिनी सेविताम् ॥
नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलाम् ।
त्रिलोचन कुटुम्बिनीं त्रिपुरसुन्दरामाश्रये ॥१॥

कदम्ब वन वासिनीं कनक वल्लकीं धारिणीम् ।
महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीं ॥
दया विभव कारिणीं विशद लोचनां चारिणीम् ।
त्रिलोचन कुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥२॥

कदम्ब वन मालया कुचभरोल्लसन्मालया ।
कुचोपमित शैलया गुरुकृपा लसद्वेलया ॥
मदारुण कपोलया मधुर गीत वाचालया ।

कथापिघननीलया कवचिता वयं लीलया । ३
कदम्ब वन मध्यगां कनक मण्डलोपरिस्थिताम् ।
षडम्बुरुहवासिनींसतत सिद्ध सौदामिनीम् ॥
विडम्बित जपारुचिं विकचचन्द्र चूडामणीम् ।
त्रिलोचन कुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥४॥
कुचाञ्चित विपञ्चिकां कुटिल कुण्डलालंकृताम् ।
कुशेशय निवासिनीं कुटिलचित्त विद्वेषिणीम् ॥
मदारुण विलोचनां मनसिजारिसम्मोहिनीम् ।
मतंग मुनिकन्यकां मधुरभाषिणीमाश्रये ॥५॥
स्मरेत्प्रथम पुष्पिणीं रुधिर विन्दु नीलाम्बराम् ।
गृहीतमधुपात्रिकां मधुविघूर्ण नेत्राञ्चलाम् ॥
घनस्तन भरोन्नतां गलित चूलिकां श्यामलाम् ।
त्रिलोचन कुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥६।
स कुंकुमविलेपनामलिकचुम्बिकस्तूरिकाम् ।
समन्द हसितेक्षणां सशरचाप पाशांकुशाम् ॥
अशेषजन मोहिनीमरुण माल्य भूषाम्बराम् ।
जपाकुसुम भासुरां जप विधौस्मराम्यम्बिकाम् ॥७॥
पुरन्दर पुरन्ध्रिकाचिकुरबन्ध सैरन्ध्रिकाम् ।
पितामह पतिव्रतां पटुपटीर चर्चारताम् ॥
मुकुन्दरमणीमणीलसदलं क्रियाकारिणीम् ।
भजामि भुवनाम्बिकां सुरवधूटिका चेटिकाम् ॥ ८ ॥

इति त्रिपुरसुन्दरी स्तोत्रम्